THE

# CHOWKHAMBÂ SANSKRIT SERIES.

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NO. 82

---

श्रीभट्टमल्लविरचिता

# आख्यातचन्द्रिका

( क्रियाकोशः )





PUBLISHED & SOLD BY

JAYA KRISHNA DÂS HARIDÂS GUPTA

*The Chowkhambâ Sanskrit Series Office,*

Benâres City.

श्रीः



आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ।
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ।
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तबकः ८२.

THE

# CHOWKHAMBA SANSKRIT SERIES

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS

## NO. 82.

THE

# Ākhyāta Chandrikā.




A LEXICON OF SANSKRIT VERBS

By

## BHATTAMALLA

*Edited for the First time with Indexes etc.,*

By


S. P. V. RANGANATHASWAMI ARYAVARALUGARU
Grandson and grateful pupil of Mahamahopadhyaya
Sri Paravastu Bhagavada Venkataranganathacharya
Aryavaraguru, Vizagapattam


*Re-Edited by*


VYĀKARAṆA-SĀHITYĀCHĀRYA-SĀHITYARATNA
PAṆDIT S'RĪ HARAGOVINDA MIS'RA



PUBLISHED BY

JAYA KRISHNA DÂS HARIDÂS GUPTA

*The Chowkhamba Sanskrit Series Office.*

Benares City

1936.

॥ श्रीः ॥

चौखम्बा-संस्कृत-ग्रन्थमाला
( ग्रन्थ-संख्या ३० )
सी॰ नं॰ ८२



श्रीभट्टमल्लविरचिता

# आख्यातचन्द्रिका।

( क्रियाकोशः )

वैशाखपत्तनीयेन, महामहोपाध्याय श्रीपरवस्तु भगवद्वेङ्कटरङ्गनाथाचार्यार्यवरगुरुपौत्रेण, तत्पादसेवासमधिगतविद्यावैशद्येन

**वेङ्कटरङ्गनाथस्वामिना आर्यवरगुरुणा**

पदसूच्यादिविन्यासपूर्वकं परिष्कृता।

सेयं

व्याकरणसाहित्याचार्य-सहित्यरत्नेन

**पण्डित श्रीहरगोविन्दमिश्रेण संशोधिता।**

प्रकाशकः—

जयकृष्णदास हरिदास गुप्तः-

चौखम्बा संस्कृत सीरिज़ आफिस,

बनारस सिटी।

वि॰ सं॰ १९९३



# प्रमेयसूची।


| | |
|---|---|
| | पत्रसंख्या |
| १ भूमिका | १—४ |
| २ प्रशस्तिश्लोकौ | १ |
| **प्रथमकाण्डारम्भः** | १—१३ |
| ३ ग्रन्थारम्भः | १ |
| भावविकारवर्गः १ | १ |
| बुद्धिवर्गः २ | ३ |
| अन्तःकरणवृत्तिवर्गः ३ | ६ |
| वाक्क्रियावर्गः ४ | ८ |
| ध्वनिक्रियावर्गः ५ | १२ |
| प्रथमकाण्डसमाप्तिः | |
| **द्वितीयकाण्डारम्भः** | १३-३३ |
| मनुष्यचेष्टावर्गः १ | १३ |
| ब्रह्मचेष्टावर्गः २ | १७ |
| क्षत्रियचेष्टावर्गः ३ | २० |
| वैश्यचेष्टावर्गः ४ | २८ |
| शूद्रचेष्टावर्गः ५ | ३२ |
| द्वितीयकाण्डसमाप्तिः | ३३ |
| **तृतीयकाण्डारम्भः** | ३४-५० |
| प्रकीर्णकवर्गः १ | ३४ |
| सनाद्यन्तवर्गः २ | ३४ |
| नानार्थवर्गः ३ | ३८ |
| आत्मनेपदपरस्मैपदवर्गः ४ | ४७ |
| तृतीयकाण्डसमाप्तिः | |
| **परिशिष्टम्** | |
| ४ पदसूची | १—२९ |
| ५ पर्यायार्थसूची | ३०—३७ |
| ६ शुद्धपाठः, पाठभेदश्च | ३८ |


इत्याख्यातचन्द्रिकायाः प्रमेयसूची समाप्ता।



प्रथमावृत्तेः

# भूमिका ।

वन्दे श्रीपरवस्तुश्रीवासगुरोः पदाश्रितं तनयम् ।
वेङ्कटरङ्गेशगुरुं रामानुजमुनिदयोल्लसितबोधम् ॥

इह खलु जगत्प्रसिद्धासु सर्वास्वपि भाषासु गीर्वाणसंस्कृतादिशब्दैर्व्यवह्रियमाणा आर्यभाषैवातिप्राचीनेति निर्विवादमेव ।

सा च भाषा नामाख्यातादिभेदेन चतुर्धा विभक्ता श्रीमता यास्केन—"तद्यान्येतानि पदजातानि नामाख्याते चोपसर्गनिपाताश्च" इति ।

तत्र सत्त्वप्रधानानां नाम्नां समाम्नायरूपेणार्थादिबोधका भट्टहलायुधादिप्रणीता निघण्टुकोशाद्यपरनामधेयाः प्रसिद्धा एव निबन्धाः ।

भावप्रधानानामाख्यातानां समाम्नायरूपेणार्थबोधकाः कोशा बहुभिः प्राचीनैः प्रणीता इति तत्तद्व्याख्यातृभिः स्वीयग्रन्थेषु प्रमाणतयोपन्यस्तैर्वाक्यैर्ज्ञायते । तत्र च मद्दृष्टिपथंगतास्त्वेते—(१) भट्टमल्लविरचिता आख्यातचन्द्रिका, (२) विद्यानन्दस्य क्रियाकलापः, (३) वीरपाण्ड्यस्य क्रियापर्यायदीपिका, (४) रामचन्द्रस्य क्रियाकोशः, (५) कविसारङ्गस्य? प्रयुक्ताख्यातमञ्जरी, (६) गुणरत्नसूरेः क्रियारत्नसमुच्चयः, (७) दशबलस्य ( वरदराजस्य वा ) धातुरूपभेदः, (८) हलायुधस्य कविरहस्यम् । तेषु चायमाख्यातचन्द्रिकाख्यः क्रियाकोशो मल्लिनाथादिभिः प्रामाणिकैः व्याख्यातृशिरोमणिभिः प्रमाणीकृतः, यतस्सर्वेष्वपि क्रियाकोशेषु प्रशस्तः । अस्य च कर्ता भट्टमल्लः कतमं देशं कतमं च कालं मण्डयामासेति त्विदानीं न निश्चेतुं शक्यते । परं तु नामलिङ्गानुशासनकर्तुरमरसिंहादर्वाचीनः, खिस्ताब्दीयचतुर्दशशतकस्थमल्लिनाथात् प्राचीन इति चानुमीयते । यत आख्यातचन्द्रिकायाः काण्डवर्गादिरीतिरमरकोशानुसारिणी, यतश्च आख्यातचन्द्रिकां प्रमाणत्वेनोद्धृतवत्सु मल्लिनाथ एव प्राचीनः ।

आख्यातचन्द्रिकाप्रमाणयितारस्त्वेतेः—(१) मल्लिनाथसूरिः, (२) अमरकोशटीकासर्वस्वकारोवन्द्यघटीयस्सर्वानन्दः, (३) मल्लिनाथसूरिसूनुः कुमारस्वामी, (४) कविकल्पद्रुमव्याख्याता दुर्गादासः, (५) अभिज्ञानशकुन्तलव्याख्याता राघवभट्टः, (६) रामायणचम्पूव्याख्याता

रामचन्द्रः, (७) मनोरमाकुचमर्दी भट्टोजीदीक्षितः, (८) सटीकराघवनैषधीयकाव्यकर्ता हरदत्तसूरिः ।

आख्यातचन्द्रिकां मुमुद्रयिषुभिः श्रीमद्भिरस्मत्पितृचरणैः सर्वशास्त्रस्वतन्त्रधिषणैः प्रातःस्मरणीयनामधेयैः श्रीनिवासजगन्नाथस्वामिभिरार्यवरगुरुभिः लिङ्गं वंशोद्भवबहुभाषावैज्ञानिककलदमाजीपण्डितस्य उत्कलमातृकाया आन्ध्राक्षरेषु पुत्रिका लेखितुमारब्धा, तेषु परमपदमलङ्कुर्वाणेषु मया सम्पूरिता । मुमुद्रयिषति च मयि मधुरेशपुर(Madras)स्थ राजकीयप्रधानपाठशालासंस्कृतोपाध्यायः(Professor of Sanskrit, Presidency College) राजकीयप्राचीनलिखितपुस्तकालयाध्यक्षः ( Curator, Government Oriental Mss. Library ) एम. ए. उपपदधारी श्रीशेषगिरिशास्त्री १८९३—९४ वत्सरीयविज्ञापनायां ( Report of a search for Sanskrit and Tamil manuscripts for the year 1893–94.)आख्यातचन्द्रिकाविषयिणीं स्वीयां मुमुद्रयिषामेवं व्यक्तयकरोत्:—Akhyatachandrika is a short treatise on verbs written by Bhattamalla. I have not seen the work noticed in any of the catalogues of Sanskrit manuscripts published in India or elsewhere. ** From the above description, it will be clearly seen that the work will be a very useful guide to the students learning Sanskrit and has a high educational value in consideration of which I intend editing it with notes and making it accessible to students studying Sanskrit in schools and colleges in this Presidency. ततो मत्पुस्तकेनापि प्रोत्साहयितुकामः पत्रमेवमलिखम्:—I see from your report on manuscripts that you are just going to get printed Akhyatachandrika of Bhattamalla with index and notes so that it may be useful for students. Sometime ago I got a manuscript of the same in Uriya character and have translated it into Telugu with the object of getting it printed myself. Now as you have

undertaken to do that work with additions which may be great used to students. I have the honour to write you I am ready to send the manusecript if you think it worth your perusal. तदुपरि तत्प्रेषितं प्रत्युत्तरम्:—Many thanks to you for your kind letter. I shall be much obliged to you if you send the Telugu transcript which you have made from the Uriya Ms. of the Akhyatachandrika of Bhattamalla. I have already secured three copies of the work from the three different countries, Salem, Kumbakonam and Mysore. Your transcript which comes from the Uriya Ms. must be very important. *** (25th. June 1900). ततो मत्पुस्तकस्य प्रतिकृतिः प्रेषिता । सोऽपि तत्प्राप्तिमनुमोदयन्नेवमलिखत्:—Many thanks to you for the copy of the Akhyatachandrika, which you were kind enough to send me and also for the careful collation you made of the transcript with the original. ** The work will be printed with an introduction, wherein I shall express my obligation to you for the good copy which have kindly secured for me. (29th. January 1901).

एवं न्यस्तभरेऽपि मयि दैवदुर्विपाकेन तस्य स्वर्गवासेन तत्रापि विघ्नमनुभूय पुनरपि मय्येवाविशदाख्यातचन्द्रिकामुद्रणभारः । शेषगिरिशास्त्रिसमीपप्रेषितमन्मातृकाविषये तत्पुत्रसकाशे पत्रद्वारा स्वयं गत्वा च कृतोऽपि यत्नः न फलेग्रहिरभूत् । 'पुस्तकं वनिता वित्तं परहस्तगतं गतम्' इति ह्याभाणकः ।

नानाविधापूर्वमहाग्रन्थसम्पादनरसिकस्य काशीस्थस्यास्मन्मित्रवर्यस्य श्रीगोविन्ददासमहोदयस्य प्रेरणया चौखम्बासंस्कृतपुस्तकमालाध्यक्षोऽनेकापूर्वमहानिबन्धप्रकाशनरसिकः श्रेष्ठिश्रेष्ठः श्रीहरिदासगुप्तः स्वीयपुस्तकमालायामेनामाख्यातचन्द्रिकां प्रचिकाशयिषुर्मय्येव शोधनभारं न्यधादिति दूरदेशस्थो विघ्नैर्मुहुर्मुहुः प्रतिहन्यमानोऽप्यहमेतत्कार्यसम्पादनाय प्रावर्तिषि ।

एतन्मुद्रणाधारभूता मातृकास्त्वेताः—

१ श्रीलिङ्गंवंशोद्भवानेकभाषावैज्ञानिकलदमाजीपण्डितस्योत्कलाक्षरमयी तालपत्रमातृका । एतत्पठने श्रीमता महाराज-श्रीविक्रमदेववर्मणाऽस्मन्मित्रप्रकाण्डेन यः सहायोऽकारि तदुपकारवर्णनेऽशक्तस्तं महाराजमनामयदीर्घायुष्ट्वाशिषा योजयामि ।

२ श्रीविजयनगरमहाराजांग्लपाठशालासंस्कृतप्रधानोपाध्यायस्य मेडेपल्लिवेङ्कटरमणपण्डितस्य मातृका अन्ध्राक्षरमयी ब्रह्मचेष्टावर्गान्ता।

३ मैसूरराजकीयप्राच्यकोशागार ( Mysore Govt. Oriental Library)स्था १०६ सङ्ख्याका कर्णाटलिपिलिखिता प्रथमपत्ररहिता प्राचीनकागजपत्रमयी । एषा च तत्कोशागाराध्यक्षस्य बि.ए. उपपद-धारिणोऽस्मन्मित्रवर्यस्य श्रीमहादेवशास्त्रिणः कृपया यावत्संशोधनमस्मन्निकटे स्थापितेति तन्महाशयस्योपकारं वर्णयितुमक्षमः तस्य धन्यवादं प्रकाशयामि । तस्य चान्ते "रौद्रिसंवत्सरअधिकआश्वीजमासे सितपक्षे द्वितीयाइन्दुवासरे......रुनगरस्थितसञ्जीवय्यपुत्रकेशवप्पेन लिखितम्" इति लेखनसमयो वर्तते ।

एतन्मातृकात्रयाधारेणैकां पुस्तिकां निष्पाद्य, आख्यातमञ्जरी-क्रियाकोश-कविकल्पद्रुम-धातुपाठ-धातुवृत्ति-कविरहस्यादिग्रन्थसहायेन यथामति संशोध्य च तदनुसारेणैषा मुद्रणा निरवर्त्यतेति शम् ।

गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः ।
हसन्ति दुर्जनास्तत्र समादधति साधवः ॥
गुणदोषौ बुधो गृह्णन्निन्दुक्ष्वेलाविवेश्वरः ।
शिरसा श्लाघते पूर्वं परं कण्ठे नियच्छति ॥

विशाखपत्तनम् } इति विज्ञापयति
१—६—०४ } वेङ्कटरङ्गनाथस्वामी.

# द्वितीयावृत्तिभूमिका ।

क्रियाकलापाख्यातमञ्जर्याद्याख्यातकोषेषु मूर्धन्यत्वेनावस्थितायाः श्रीभट्ट-मल्लविरचिताख्यातचन्द्रिकाया आद्यसंस्करणं महता श्रमेण सम्पादितं तत्रभवद्भि-र्विद्वदग्रेसरैः श्रीवेङ्कटनाथस्वामिभिरित्यत्र नास्ति कश्चित्सन्देहलेशः । पुनः श्रेष्ठि-वर्य्यैः काशीस्थविद्याविलासमुद्रणयन्त्रालयाध्यक्षैर्जयकृष्णदासहरिदासगुप्तमहोदयैर्मयि सन्न्यस्तमस्या द्वितीयसंस्करणभारं पिष्टपेषणायितं नाकलयन्तु प्रेक्षावन्तः, सूक्ष्माक्षरत्वादिनाऽक्षरसंयोजक-संशोधक-यन्त्रादि-सुलभदोषजानामशुद्धिविशेषा-णामपाकरणस्य प्रतिमुद्रणमावश्यकत्वात् । अस्याः प्रथमसंस्करणे पदपर्यायसूच्यां वर्गाद्यक्षर-पर्यायाङ्कावास्तामिति तद्द्वारा पदान्वेषणे क्लिष्टत्वमाकलय्यास्मिन् संस्करणे मया क्रमशः काण्ड-वर्ग-पर्यायाङ्काः परिवर्तिताः । यत्रकचिच्च भिन्नपर्या-यपदानां प्रमादिनैकस्मिन्नेव पर्यायाङ्क उल्लेख आसीत्ते च तत्र २ यथाधिषणं पृथक्कृत्य संलिखिताः ।

मुद्रिताया आख्यातचन्द्रिकायां श्लोकानां क्वचिदाधिक्यं कुत्रचिन्न्यूनत्वं कुत्रचिद्भिन्नत्वमांशिकसमानाकारत्वं च संदृश्यते । वर्गनाम्नां सर्वत्र सरूपत्वेऽपि एतदाख्यातचन्द्रिकायां पश्चिमस्य 'आत्मनेपदपरस्मैपदवर्ग'स्य स्थाने तत्र 'अक-र्मक'नामको वर्गः संदृश्यते, तद्वर्गे श्लोकाश्चैतदपेक्षया सर्वथा भिन्ना एव, श्लोक-संख्या च तत्र किञ्चिदेव न्यूना । तत्र प्रथमकाण्डस्य १ भावविकारवर्गे २०, २ बुद्धिविकारवर्गे ३१, ३ अन्तःकरणवृत्तिवर्गे ३६½, ४ वचन(वाक्)क्रियावर्गे १२, एवं प्रथमकाण्डे सर्वश्लोकसंख्या १३०½; द्वितीयकाण्डस्य १ मनुष्यचे-ष्टावर्गे ४६, ब्रह्मचेष्टावर्गे ३१½, क्षत्रियचेष्टावर्गे ८८, ४ वैश्यचेष्टावर्गे ४४, ६ शूद्रचेष्टावर्गे १७½, एवं द्वितीयकाण्डे सर्वश्लोकसंख्या २२७; तृतीयकाण्डस्य १ प्रकीर्णवर्गे १०½, २ सनादिवर्गे २१, ३ अनेकार्थवर्गे ३९½, आत्मनेपदपरस्मै-पदवर्गस्थानीये अकर्मकवर्गे १४½, एवं तृतीयकाण्डे सर्वश्लोकसंख्या ८१½ वर्तते । इत्थञ्च ४३९ श्लोकैर्ग्रन्थः परिपूर्णः । तत्रादौ—

"भट्टमल्लैर्विरचिता याद्भुताख्यातचन्द्रिका ।
ततः संगृह्यते प्रायः प्रयुक्तो धातुसञ्चयः" ॥

इत्येवं कृतया तद्ग्रन्थसम्पादकप्रतिज्ञया तद्ग्रन्थस्य सङ्ग्रह( संक्षेप )रूपतया एतदाख्यातचन्द्रिकापेक्षया तत्र न्यूनत्वस्यैवौचित्यात् तत्रेत. सर्वांशभिन्नाः, अधिका वा श्लोकाः कुतस्त्याः, अन्ते वर्गश्लोकविपर्ययश्च कथमिति त एव विदाङ्कुर्वन्तु ।

अन्ते च मानवसहजदोषजं स्खलितं दृष्टिपथमागच्छेच्चेत्क्षाम्यन्तु प्रेक्षावन्त इति नामन्नामभ्यर्थये ।

गवर्नमेण्ट संस्कृत कालेज,
काशी।
महाशिवरात्रिः सं० १९९२ वै०

विबुधजनवशंवदः—
श्रीहरगोविन्दमिश्रः

॥ श्रीः ॥

## प्रशस्तिश्लोकौ ।

श्रीमतो भट्टमल्लाख्यान्निःसृतैषा कालानिधेः ।
विद्वच्चकोरैरास्वाद्या भवत्वाख्यातचन्द्रिका ॥ १ ॥
त्रयीमूर्तेर्भगवतः सम्प्रवृत्ता प्रसादतः ।
त्रैलोक्यचक्षुर्भूतस्य तस्य प्रीत्यै प्रकल्पताम् ॥ २ ॥

॥ श्रीमते हयग्रीवाय नमः ॥

॥ नमः परमर्षिभ्यः ॥

भट्टमल्लविरचिता ।

# आख्यातचन्द्रिका ॥

प्रथमकाण्डः ।

भूवार्यादिप्रकृतये पुरुषत्रयमूर्तये ।
सदाख्यातपदायास्मै परस्मायात्मने नमः ॥ १ ॥
संस्मृत्य गुरुपादाब्जे भट्टमल्लेन रच्यते ।
व्युत्पित्सूनां प्रमोदार्थमेकार्थाख्यातपद्धतिः ॥ २ ॥

१. अथ भावविकारवर्गः ॥

(१) सत्तायामस्ति भवति विद्यते (२) चाथ जन्मनि ।
उत्पद्यते जायते च प्ररोहत्युद्भवत्यपि ॥ ३ ॥
(३) निर्वर्तते सम्भवति सिद्धौ सिध्यति राध्यति ।
निष्पद्यते च राध्नोति साध्नोति फलतीति च ॥ ४ ॥
(४) वर्तते तु वसत्यास्ते ध्रियते चावतिष्ठते ।
क्षियति स्थलति स्थित्यां मठत्यपि च तिष्ठति ॥ ५ ॥
(५) जीवे बलत्यूर्जयति श्वसित्यनिति जीवति ।
अन्यतेऽथ प्राणिति च समनित्युदनित्यपि ॥ ६ ॥
व्यनित्यपानिति प्राणवृत्तिष्वाख्यातपञ्चकम् ।
(६) कृच्छ्रजीवे क्षञ्जयति कठत्यातङ्कति त्रयम् ॥ ७ ॥

(७) परिणामे परिणमत्यात्मनेऽपि विवर्तते ।
सम्पद्यते कल्पते(८)ऽथ वृद्धौ बृंहति वर्धते ॥ ८ ॥
आप्यायते स्फायते च श्वयत्यृध्नोति बर्हति ।
आपूर्यते पुष्यति च पोषत्यृध्यति पूषति ॥ ९ ॥
वंहते मंहते मेध्यत्येधते च विपोलति ।
नीवत्यपि स्थूलयते तथा पीवति मीवति ॥ १० ॥
महीयते च बठति विपोलयति तीवति ।
क्रमते प्यायते स्फीतीभवति प्रथतेऽपि च ॥ ११ ॥
क्रम्यते प्रसते तौति तवीति च्छान्दसौ क्वचित् ।
(९) स्फुटति स्फोटते फुल्लत्युन्मीलत्यपि पुष्यति ॥१२॥
विजृम्भते विकचते विकासे विकसत्यपि ।
(१०) मीलति स्मीलति क्ष्मीलत्येते सङ्कुचतीति च ॥ १३ ॥
कूणयत्यपि सङ्कोचे मुकुलीभवतीति षट् ।
(११) अथो जरायां जरति सप्त जीर्यति झीर्यति ॥ १४ ॥
जूर्यते जारयति च जिनाति च जृणाति च ।
(१२) दलति स्फोटति विशीर्यते फलति शीयते ॥ १५ ॥
द्राडतेऽमी विशरणे ध्राडते चाष्ट सीदति ।
(१३) अल्पत्वे लिश्यते कृश्यत्यमी ह्रसति चुण्डते ॥ १६ ॥
चत्वारो(१४)ऽथ दरिद्राति व्यृध्नोति व्यृध्यतीत्यपि ।
दरिद्रत्वे त्रयो(१५)ऽथापक्षीयते चापि दीयते ॥१७॥
अपक्षये जायति चापक्षयत्यपि दस्यति ।
तस्यत्यपि क्षायति च सायतीति पदाष्टकम् ॥ १८ ॥
(१६) सप्त प्रध्वंसतेऽप्येति विनश्यति विलीयते ।
प्रलीयते विनाशेऽमी स्यू रिष्यति विपद्यते ॥ १९ ॥
(१७) परैति प्रैति मरणे म्रियते च प्रमीयते ।

सन्तिष्ठते समाप्नोति विरमत्यारमत्यपि ॥ २० ॥
पर्यवस्यत्युपरमत्यात्मनेपदसंस्थितौ ।
(१८) निर्वाति निर्वायति विध्यायत्युद्वायतीति च ॥ २१ ॥
उद्वाति शाम्यतीत्येते तेजसो विरतौ तु षट् ।
इति भावविकाराः षट् सभेदाः प्राय ईरिताः ॥२२॥

इति भावविकारवर्गः ॥ १ ॥

## २. अथ बुद्धिवर्गः ॥

(१) स्फूर्तौ सत्ताविरस्त्याविर्भवति प्रादुरस्ति च ।
प्रादुर्भवति निर्भाति स्फुरति प्रतिभासते ॥ २३ ॥
(२) वेत्ति जानाति जानीते वेद बोधति बुध्यते ।
निबोधते चेतयते मन्यते प्रतिपद्यते ॥ २४ ॥
प्रेक्षते पण्डते प्रत्येत्यवगच्छति चेतति ।
मनुते चोपलभतेऽवैति वेदयतेऽञ्चति ॥ २५ ॥
ज्ञाने * मानयते संवेत्त्यात्मनेऽयमकर्मकः ।
गृह्णात्यपि च गृह्णीते चिकेत्ति च चिकेति च ॥ २६ ॥
एतौ छन्दसि केषाञ्चित् ज्ञानार्थाः षट् च विंशतिः ।
धातू च नीवदी ज्ञानविषयौ स्तः क्वचिद्यथा ॥ २७ ॥
विद्यासु नयते प्राज्ञो वदते तासु पण्डितः ।
(३) चित्तेमनस्युरसितः करोति कुरुते † परे ॥ २८ ॥
मनसा गोचरीकारे (४) मनस्वित्वे मनस्यति ।
(५) मेधायति तु मेधायां त्रयं मेदति मेदते ॥ २९ ॥
(६) विभ्राम्यति विपर्येति विपर्यस्यति विभ्रमे ।

* "गारयते" इति पाठान्तरम् ॥
† "पदे" इति पाठान्तरम् ॥

भ्रमति भ्राम्यतीत्येते (७) विमतौ तु विमायति ॥ ३० ॥
विमन्यते विवदते तथा विप्रतिपद्यते ।
(८) संशये पञ्च सन्देग्धि सान्दिग्धे विचिकित्सति ॥ ३१ ॥
संशेते च विशेते च (९) वितर्कयति तूहते ।
मीमांसते स्यमयते वितर्के विमृशत्यपि ॥ ३२ ॥
विन्ते चोत्पश्यति परामृशत्युत्प्रेक्षते तथा ।
णावप्युपालोचते द्वौ पर्यालोचत इत्यमू ॥ ३३ ॥
विचारयति सम्पृच्छत्यात्मनेऽयमकर्मकः ।
सम्प्रधारयतीत्येते समर्थयत इत्यपि ॥ ३४ ॥
(१०) शङ्कायां रगतीति स्याद्रेकते शङ्कते त्रयम् ।
(११) सम्भावयति तुल्यार्थाववकल्पयतीत्यमू ॥ ३५ ॥
(१२) विस्रम्भते तु प्रत्येति विश्वसित्याश्वसित्यपि ।
श्रद्धत्ते श्रद्दधातीति विश्वासे प्रश्वसित्यपि ॥ ३६ ॥
(१३) विवेके तु विवेवेक्ति विविनक्त्यात्मनेऽप्यमू ।
(१४) निश्चिनुते निर्णयते निर्णयति च निर्णयेऽध्यवस्यति च॥३७॥
निष्टङ्कयति च सप्त च निर्धारयतीह निश्चिनोति स्युः ।
(१५) सङ्कल्पयति सङ्कल्पेऽभिसन्धत्त उदीक्षते ॥ ३८ ॥
(१६) लक्षीकरोत्युद्दिशति चोद्देशेऽपदिशत्यपि ।
साक्षात्करोत्यात्मनेऽपि प्रत्यक्षेऽध्यक्षयत्यपि ॥ ३९ ॥
साक्षयत्यपि चाध्यक्षीकरोत्यनुभवत्यपि ।
(१७) मिमीते मीयते माति मिनोति मिनुते मितौ ॥ ४० ॥
प्रमानुमोपमासु स्युः मानूपादीन्यनुक्रमात् ।
(१८) ध्याने चिन्तयति ध्यायत्यमी भावयति त्रयः ॥४१॥
(१९) स्मरणे त्वभिजानाति स्मरत्यध्येति च त्रयम् ।
(२०) प्रतिजानाति चोत्कण्ठत्युत्कण्ठयति मण्ठते ॥ ४२ ॥

उत्कण्ठते चोत्कण्ठायामाध्यायत्युन्मनायते ।
(२१) दैवं पर्यालोचयतीत्यर्थे राध्यति चेक्षते ॥ ४३ ॥
(२२) प्रत्यभिजानात्यभिसन्धत्तेऽप्यनुसन्दधाति समाः ।
प्रतिसन्धत्ते प्रत्यवमृशति प्रतिसन्दधातीति ॥ ४४ ॥
(२३) विस्मृत्यां विस्मरति च स्फूर्छति प्रस्मरत्यपि ।
(२४) मोहे विचेतीभवति विमुह्यति च मूर्छति ॥ ४५ ॥
युप्यत्यष्टौ विलुभति रुप्यत्यृच्छति लुप्यति ।
(२५) प्रयुच्छति संस्रति चानवधाने प्रमाद्यति ॥ ४६ ॥
विमनीभवतीति स्युः पञ्चामी विमनायते ।
(२६) समादधात्यवदधात्यमी प्रणिदधाति च ॥ ४७ ॥
आत्मनेऽपि त्रयं शीलत्यवधाने(२७)ऽथ संश्रवे ।
आशृणोति प्रतिशृणोत्यभ्युपैत्यभ्युपेयते ॥ ४८ ॥
आतिष्ठतेऽवगिरते प्रतिजानीत इत्यपि ।
सङ्गिरते संशृणोतीत्यात्मनेऽयमकर्मकः ॥ ४९ ॥
समादधात्यात्मनेऽपि गुणत्यभ्युपगच्छति ।
(२८) उररीकुरूरीभ्यः करोति कुरुते * परे ॥ ५० ॥
प्रसौत्यभ्यनुजानाति प्रसवत्यनुमन्यते ।
शूषति स्मानुमनुतेऽप्यनुज्ञाया(२९)मथेक्षणे ॥ ५१ ॥
निर्वर्णयति निध्यायत्यालोकयति पश्यति ।
आलोकते लक्षयते निभालयत ईक्षते ॥ ५२ ॥
निरूपयत्यपि निशामयते च विचायति ।
निबुन्दत्यात्मनेऽपि द्वौ लक्षयत्यपि लोचते ॥ ५३ ॥
चष्टे छन्दासि सम्पश्यत्यात्मने स्यादकर्मकः ।
(३०) शृणोत्याकर्णयति च तद्वन्निशमयत्यपि ॥ ५४ ॥

---

* "पदे" इति पाठान्तरम् ॥

निशाम्यतीति श्रवणे (३१) * घ्राणे जिघ्रति शिङ्घति ।
(३२) स्पृशत्यामृशति स्पर्शे छुपत्यालभते च षट् ॥ ५५ ॥
स्पशति स्पशते (३३) लेढि त्वास्वादे रसयत्यपि ।
लागयत्यास्वादयति लीढे राकयतीति षट् ॥ ५६ ॥

इति बुद्धिवर्गः ॥ २ ॥



३. अथ अन्तःकरणवृत्तिवर्गः ॥

(१) लषते लष्यति लषत्याशास्ते माङ्क्षतीप्सति ।
आकाङ्क्षति स्पृहयति नाथते वष्टि वाञ्छति ॥ ५७ ॥
आशंसते कामयते लष्यते वाङ्क्षतीच्छति ।
लिप्सते हर्यतीच्छायां खटत्यप्यनुरुध्यते ॥ ५८ ॥
विंशतिः स्यु(२)र्भ्रूणयते त्वपि लुभ्यति गृध्यति ।
कक्षते † चार्थयति च गार्ध्ये षट् स्युर्धनायति ॥ ५९ ॥
(३) क्रमते क्रम्यते यस्यत्युद्युङ्क्ते चोत्सहत्यपि ।
आराधयत्युत्सहत एषते संयसत्यपि ॥ ६० ॥
यसत्यपि प्रयतते संयस्यति च जेहते ।
वेहते षोडशोत्साहे वाहतेऽमी व्यवस्यति ॥ ६१ ॥
(४) विप्रीयतेऽपरजति द्वेष्टि द्वेषेऽपरज्यति ।
विरुणद्धि विगृह्णाति पञ्चामी चात्मनेपदे ॥ ६२ ॥
वैरायते स्पर्धते च (५) विराध्नोत्यभ्यसूयति ।
सूक्ष्यतीक्ष्यति चेर्ष्यायामीर्ष्यत्यपि च मत्सर्यते ॥ ६३ ॥
(६) मोदते ह्लादते माद्यत्यानन्दति च तुष्यति ।
हृष्यति प्रीयते निर्वात्यपि नन्दति तूषते ॥ ६४ ॥

* "घ्रातौ" इति राघवनैषधीय १।४ श्लोकव्याख्याने पाठः ॥
† "गर्दयति च" इति पाठान्तरम् ॥

निर्वृणोत्यात्मने सुख्यत्येते प्रीतौ सुखायते ।
प्रचेतीभवतीत्येवं प्रमनीभवतीति च ॥ ६५ ॥
सुमनायत इत्येवं सुमनीभवतीत्यपि ।
(७) ह्रियां ह्रीच्छति जिह्रेति लजते च हृणीयते ॥ ६६ ॥
व्रीड्यति त्रपते मन्दाक्षयत्यप्यथ लज्जते ।
(८) बिभेति त्रस्यति दरत्येवं त्रसति भेषते ॥ ६७ ॥
विनक्ति भ्यसते चैव दर्भयत्यपि दर्भति ।
भेषत्युद्विजते भीत्यां व्यथते द्वादशेरिताः ॥ ६८ ॥
(९) तितिक्षतेऽधिकुरुते क्षान्तौ सहति सह्यति ।
मृष्यतीदं मर्षति चेत्यात्मनेऽपि चतुष्टयम् ॥ ६९ ॥
* क्षाम्यत्येवं क्षामयति क्षमते परिमृष्यति ।
तथा मर्षयति क्षम्पयति साहयतीति च ॥ ७० ॥
(१०) अवधीरयति यातयत्यवजानाति हेडते ।
विमानयत्यट्टयति सुट्टयत्यवमन्यते ॥ ७१ ॥
होडते हिण्डते रौडत्येते शेटति सेटति ।
करोत्यधस्तिरोभ्यां चात्मनेऽवगणयत्यपि ॥ ७२ ॥
अनादरे स्माययते तथा परिभवत्यपि ।
मङ्क्ते त्वात्मने विप्रकरोति निकरोति च ॥ ७३ ॥
त्रयोऽतिसन्दधात्येते (११) विचाति च्छलयत्यपि ।
प्रलोभयत्यपि शठत्युल्लापयत इत्यपि ॥ ७४ ॥
दभ्नोति विप्रलभते प्रतारयति वञ्चने ।
अमी वञ्चयते गर्धयति (१२) चाथ जिघांसने ॥ ७५ ॥
जिघांसति द्रुह्यति चापराध्नोत्यपराध्यति ।
अपराध्यत्यपकरोत्येतेऽपकुरुतेऽपि च ॥ ७६ ॥

* "शाम्यत्येवं शोकयति" इति पाठान्तरम् ॥

चिरिणोति रिणोत्येवं क्षिणोति जिरिणोति च ।
दाश्नोति च हृणोत्याहुः पदानि च्छान्दसानि षट् ॥ ७७ ॥
(१३) कुष्यति क्रुध्यति क्रोधे भामते भामयत्यपि ।
चण्डते रोषयति च मन्तूयति च रुष्यति ॥ ७८ ॥
गुध्नात्येवं संरभतेऽथागृह्णात्यात्मनेऽप्यदः ।
आग्रहेऽभिनिविशते (१४) कृपायां करुणायते ॥ ७९ ॥
कृपायते चानुकम्पतेऽनुक्रोशत्यृतीयते ।
घृणायते च दयते कृपतेऽभ्युपपद्यते ॥ ८० ॥
प्रसीदत्यनुगृह्णाति चात्मनेऽयं (१५) विषीदति ।
शोचतीति च शोके द्वे (१६) त्रयोऽनुशयवाचिनः ॥ ८१ ॥
अनुशेतेऽनुतपति स्युर्विप्रतिसरत्यमी ।
(१७) क्रन्दति क्रन्दति क्रन्दत्यस्रयत्यपि रोदिति ॥ ८२ ॥
बाष्पायते विलपति तेवते परिदेवते ।
क्रोशति क्लिन्दते क्लिन्दत्येते द्वादश रोदने ॥ ८३ ॥
(१८) अनुरज्यत्यनुरजत्यात्मने मिन्दयत्ययम् ।
(१९) मेद्यति स्निह्यति स्नेहे प्रीयते सप्त मेदते ॥ ८४ ॥
गर्वेऽभिमन्यते गर्वयते कर्वति खर्वति ।
हृष्यति स्माभिमनुते गर्वत्युद्धाति दृप्यति ॥ ८५ ॥
क्षीबते शौटति कडत्यपि हर्षति कण्डते ।
माद्यत्यहङ्करोत्यात्मने(२०)ऽप्युन्मादे तु लोडति ॥ ८६ ॥
म्लेटत्युन्माद्यति म्रेडत्येते लेट्यति लोट्यति ।
(२१) ताम्यति श्राम्यति ग्लानौ खिन्ते खिन्दति खिद्यते ॥८७॥
ग्लायति क्लाम्यति परिम्लायति क्लामतीति च ।
निर्विद्यते चोपति च ग्लेपते(२२)ऽप्यथ दूयते ॥ ८८ ॥
क्लिश्यते व्यथते तन्तस्यति पम्पस्यतीति च ।

दुःखायते दुःखयति च दुःखे कृच्छ्रायतेऽष्टकम् ॥ ८९ ॥
(२३) बीभत्सते च बीभत्से जुगुप्सत ऋतीयते ।
(२४) प्रमीलतीति तन्द्रयां स्याद्घूर्णते प्रचलायते ॥ ९० ॥
(२५) जम्भते जृम्भते चापि जृम्भे जञ्जभ्यते त्रयम् ।
(२६) शेते द्रायति निद्राति संसस्ति स्वापितीति च ॥ ९१ ॥
निद्रायते संविशति निद्रायां संस्ति मन्दते ।
(२७) चलते परिवृत्तौ स्याद्घोटते परिवर्तते ॥ ९२ ॥
(२८) प्रबुध्यते च जागर्ति द्राहते जागरे त्रयम् ।

इत्यन्तःकरणवृत्तिवर्गः ॥ ३ ॥

४. अथ वाक्क्रियावर्गः ॥

(१) आचष्टे वक्ति वदति रपत्याख्याति भाषते ।
ब्रूतेऽभिधत्ते गदति व्याहरत्यपि जल्पति ॥ ९३ ॥
ब्रवीत्यभिदधाति व्याहरते कथयत्यपि ।
गृणात्युदीरयत्युक्तौ कीर्तयत्यालपत्यपि ॥ ९४ ॥
भणत्यपि वचत्येके वाचयत्यपि शंसति ।
(२) पठत्यधीतेऽध्ययने चर्चयत्यपि चर्चति ॥ ९५ ॥
आमनत्युपयुङ्क्ते च गमयत्यपि शिक्षते ।
(३) शिक्षणेऽध्यापयति च शिक्षयत्यनुशास्ति च ॥ ९६ ॥
(४) वेदमाचष्ट इत्यर्थे वेदापयति सम्मतम् ।
(५) संस्तौत्यभ्यस्यति परिचिनोतीत्यात्मनेऽप्यमी ॥ ९७ ॥
स्युः शीलयति च गुणयत्याम्रेडयति शीलने ।
(६) सत्यापयति सत्योक्तौ (७) कुन्द्रयत्यनृतोदिते ॥ ९८ ॥
(८) असभ्यगुक्तौ शठयत्येवं श्वठयति द्वयम् ।
(९) अपशब्दयति म्लेच्छत्यपभ्रंशयतीत्यपि ॥ ९९ ॥

म्लेच्छयत्यपशब्दे स्युरपभाषत इत्यमी ।
(१०) स्खलति भ्रेषति म्लेषत्यन्गत्वेऽन्यथयत्यपि ॥ १०० ॥
(११) मिथ्याकारयते त्वेतदन्यथात्वेऽसकृत्कृते ।
(१२) शपते शप्यति शपत्याक्रोशत्यपि शप्यते ॥ १०१ ॥
बेटत्याक्रोशनेऽमी षड(१३)थ मिथ्याभिशंसने ।
अभ्याख्यात्यप्यभिशपत्यभ्याचष्टेऽभिशंसति ॥ १०२ ॥
(१४) जुगुप्सते वाचयति प्रवदत्यपि गर्हते ।
त्रयः क्षिपत्यात्मनेऽपि चोपक्रोशति निन्दति ॥ १०३ ॥
निसः परेश्च वदति गल्हत्यपि च गल्हते ।
निन्दायां स्युः कुत्सयते क्षिपत्यपकरोत्यमी ॥ १०४ ॥
(१५) भर्त्सयते तर्जयते सन्तर्जति लजति लाजति च ।
लञ्जति लाञ्जति तुल्याः तर्जयति च दृश्यते कविषु ॥१०५॥
(१६) प्रतिभिन्ते प्रतिभिनत्त्युपालभत इत्यपि ।
उपालम्भे (१७) सनिन्दे तु परिभाषत इत्यदः ॥१०६॥
(१८) स्तौति स्तुते नुवति नौति पनायतीट्टे
स्तुत्यामृचत्यपि पणायति च स्तवीति ।
स्युर्वन्दतेऽर्कयति चेडयति प्रशंस-
त्येतानि पञ्चदश दीव्यति मन्दते च ॥ १०७ ॥
(१९) कत्थते स्तोमयति च श्लाघते शाडतेऽपि च ।
शीभते शल्भते शाठयते स्युः सप्त कत्थने ॥१०८॥
(२०) कवते वर्णयति च कवित्वे कवयत्यपि ।
(२१) उपश्लोकयतीत्येतच्छ्लोकोपस्तवनार्थकम् ॥ १०९ ॥
(२२) यज्ञेषु शंसतीत्यृग्भिः (२३) स्तुते स्तौतीति सामभिः ।
(२४) शास्त्रे * प्रतिगृणातीति प्रोत्साहेऽनुगृणाति च ॥ ११० ॥

* शास्त्रे शास्त्रसम्बन्धिनि, प्रोत्साहे इत्यस्य विशेषणमेतत् ॥

(२५) स्यात्प्रत्यभिवदत्याशीर्वादे आशास्त इत्यपि ।
(२६) निबध्नाति ग्रन्थति च ग्रथ्नाति श्रन्थयत्यपि ॥ १११ ॥
श्रथ्नाति वटयत्येवं पटयत्यपि गुम्फति ।
गुफत्येकादश ग्रन्थे दृभति ग्रन्थयत्यपि ॥ ११२ ॥
(२७) समाहरति सङ्क्षेपे सङ्गृह्णाति समस्यति ।
सङ्क्षिपत्यात्मनेऽप्येते सङ्क्षिप्यति तनक्ति च ॥ ११३ ॥
यन्त्रयत्यपि सङ्क्षिप्तावष्ट कूणयतेऽप्यमी ।
(२८) विस्तृणोति व्यस्यति च विस्तृणात्यातनोति च ॥ ११४ ॥
चत्वारस्त्वतिविस्तारे (२९) पञ्चते पञ्चयत्यपि ।
व्याकरोति व्याकुरुते व्याचष्टेऽर्थापयत्यपि ॥ ११५ ॥
व्याख्याति स्पष्टयति च व्यनक्ति व्यञ्जयत्यपि ।
करोति प्रादुराविर्भ्यां विवृणोत्यात्मनेऽप्ययम् ॥ ११६ ॥
प्रकाशने प्रकथयत्येते लक्षयतीत्यपि ।
तिष्ठते घोषयति च विशब्दयति घोषति ॥ ११७ ॥
(३०) आकारयत्याह्वयति हूतौ निह्वयते त्रयम् ।
(३१) स्यात्संहूतौ संह्वयते (३२) स्पर्धया ह्वयते ह्वे ॥ ११८ ॥
(३३) अनुयुङ्क्ते प्रश्नयति प्रश्ने ज्ञीप्सति पृच्छति ।
(३४) आपृच्छते तु यात्रार्थे (३५) विप्रश्ने राध्यतीक्षते ॥ ११९ ॥
(३६) आभिमुख्येन वचने प्रवदत्यभिवक्ति च ।
प्रतिवक्त्युत्तरयति प्रत्याहेत्यादयोऽपि च ॥ १२० ॥
(३७) अपह्नुतेऽपजानीते निह्नुतेऽपलपत्यमी ।
अपह्नवे (३८) निराचष्टे प्रत्याचष्टे निरस्यति ॥ १२१ ॥
प्रत्यादिशत्यपनयत्यपोहति परास्यति ।
पराणुदति चापास्यत्यात्मने स्युर्व्युदस्यति ॥ १२२ ॥
नवैतेऽपाकरोतीति प्रत्याख्याति निराकृतौ ।

पराकरोत्योणति च दूषयत्यपि लुञ्चति ॥ १२३ ॥
(३९) उपमन्त्रयते चोपवदते सान्त्वयत्यपि ।
उपत्युपच्छन्दयति सामयत्यपि सान्त्वने ॥ १२४ ॥
सभाजनयतीत्येतदात्मनेऽथ(४०)थ सूचने ।
सूचयत्यप्युत्कुरुते त्रयः पिशुनयत्यमी ॥ १२५ ॥

इति वाक्क्रियावर्गः ॥ ४ ॥

५. अथ ध्वनिक्रियावर्गः ॥

(१) ह्लादते नर्दति नदत्यपि गर्जति गुञ्जति ।
कूजति क्षीजति गुजत्यपि गजति गृञ्जति ॥ १२६ ॥
रेभते शिञ्जति रणत्येवं व्रणति मुञ्जति ।
अम्बते लम्बते वेटयणति क्वणतीति च ॥ १२७ ॥
शब्दायते कणति च रौति भ्रणति रासते ।
वणति ध्रणति ह्रादते च ध्वनति नासते ॥ १२८ ॥
कल्लते कौति बनति ध्वनयत्यपि मोजति ।
कवते तोसति रसत्यपि ह्रसति रायति ॥ १२९ ॥
गवते घोषति रवीत्यपि स्यमति कायति ।
ङवते घवते क्नूयतेऽवते स्वनतीति च ॥ १३० ॥
रम्भते खवते गर्जयत्येते शब्दवाचिनः ।
(२) भषते बुक्कयति च बुक्कतीति शुनां ध्वनौ ॥ १३१ ॥
(३) रिणाति रेषते वार्के (४) तिरश्चां वाश्यते ध्वनौ ।
(५) ध्राङ्क्षति ध्राक्षति ध्वाङ्क्षत्येते स्युर्घोरवाशिते ॥ १३२ ॥
(६) घुरत्यार्ते च कुरति (७) तारे कोचति निःस्वने ।
(८) हेषते ह्रेषतेऽश्वानां (९) हस्तिनां बृंहतीति च ॥ १३३ ॥

(१०) जीमूतानां स्तनयति गदयत्यपि गर्जति ।
(११) स्फूर्जत्यशनिनिर्घोष (१२) उत्कण्ठास्वन आनुते ॥ १३४ ॥
(१३) उच्चर्चति च सङ्क्रीडेत्यतें शकटकूजने ।
(१४) हिक्कते हिक्कतीत्येतौ हिक्कायां (१५) क्षौति तु क्षुते ॥ १३५ ॥
(१६) कासते कफजे शब्दे (१७) सौरते मणतीत्यदः ।
(१८) कौक्षे कर्दत्य(१९)पानोत्थे पर्दते शर्धते पदे ॥ १३६ ॥
(२०) चीत्करोति * टङ्करोति करिकार्मुकयोः क्रमात् ।
द्वावात्मनेऽपि (२१) भूषादेः शिङ्क्ष (२२) गीते तु गायति १३७॥
(२३) उपवीणयतीत्येतदुपगाने हि वीणया ॥ १३८ ॥

इति ध्वनिक्रियावर्गः ॥ ५ ॥

अत्र भावविकाराणां धियामिच्छादिकर्मणाम् ।
वाचां तत्सङ्गतानां च पर्यायाः प्राय ईरिताः ॥ १३९ ॥

इति प्रथमकाण्डः ॥

अथ द्वितीयकाण्डः ।

अथोच्यन्ते नृविप्रादिचेष्टा वर्गैः समासतः ।
प्रसङ्गसङ्गताश्चान्याः पर्यायैस्तिङ्पदात्मकैः ॥ १ ॥

१. अथ मनुष्यचेष्टावर्गः ॥

(१) प्रक्रम्यते प्रारभते प्रस्तौत्युद्घातयत्यपि ।
प्रस्तुते चोपक्रमते दशोपक्रम्यतेऽप्यमी ॥ २ ॥

* "कङ्करोति" इति पाठान्तरम् ॥

अभ्यादत्ते प्रक्रमते उपजानात्युपक्रमे ।
(२) कृतौ करोत्याबहति * विदधात्यादधाति च ॥ ३ ॥
वितनोत्यात्मने पञ्च (३) सृजत्युत्पादयत्यपि ।
निर्मिमीते भावयति निर्माति रचयत्यपि ॥ ४ ॥
निष्पादयति निर्वर्तयति साधयतीति च ।
(४) अनुतिष्ठत्याचरति श्रद्धायुक्तेऽनुसृज्यते ॥ ५ ॥
(५) उत्तिष्ठते तु घटते चेष्टते ग्रन्दतीहते ।
व्यायच्छते व्याप्रियते चेष्टनेऽष्टौ प्रवर्तते ॥ ६ ॥
(६) विड्डुत्सर्गे तु गुवति हदते(७)ऽथावमेहति ।
मूत्रणे मूत्रयति च प्रस्रवत्यपि च त्रयम् ॥ ७ ॥
(८) उद्वर्तयति चोत्सादयत्युत्सीदति तत्समम् ।
(९) वस्ते प्रोर्णौति संवस्त्रयति प्रोर्णोति चेलति ॥ ८ ॥
परिधत्ते परिदधात्याच्छादे प्रोर्णुतेऽष्टकम् ।
(१०) अनुलिम्पति चर्चायां दिग्धे देग्ध्यनुलिम्पते ॥ ९ ॥
चर्चत्येवं चर्चयति षड(११)थो भूषणार्थकाः ।
मण्डति मण्डयति च भूषयत्यपि भूषति ॥ १० ॥
परिष्करोत्यात्मनेऽलङ्करोति द्वे च मङ्क्ते ।
प्रसाधयत्य(१२)थोत्तंसत्यवतंसेऽवतंसति ॥ ११ ॥
(१३) प्रतिमुञ्चत्यपिनह्यत्यामुञ्चति पिनह्यति ।
भूषाद्यामोचने चत्वार्यूहनीयानि चात्मने ॥ १२ ॥
(१४) चकास्ति भासते भाति द्योतते रोचतेऽसति ।
राजति त्वेषति घृणोत्यात्मनेऽपि चतुष्टयम् ॥ १३ ॥
भ्राजते शुम्भति शुभत्येजते शोभतीति च ।
प्रकाशते भ्राशते च भ्लाशते श्यन्यपि द्वयम् ॥ १४ ॥

---

* "विदधात्यादधात्यपि" इति राघवनैषधीय १।१२३ श्लोकव्याख्याने पाठः ॥

भ्रेजते दीव्यति हदत्यमी ज्वलति जोतते ।
वर्चते दीप्यते दीप्तौ कनत्युल्लसतीति च ॥ १५ ॥
केचिज्जिघर्ति दीधीते बभास्ति छान्दसान्विदुः ।
कश्चते योतते मन्दतेऽमी द्वात्रिंशदीरिताः ॥ १६ ॥
(१५) नटत्यमी नाटयति नृत्ते नृत्यत्य(१६)थो हसे ।
जक्षिति कक्खति तकति प्रहसति कखति घघति स्मयते१७
(१७) क्रीडति दीव्यति खेलति केलति विहरति च कूर्दते लसति ।
रमतेऽमी विहरते कुमारयति खूर्दते ॥ १८ ॥
केलायति ललत्येलायति खेलायतीति च ।
आङोऽनुसम्परिभ्यश्च क्रीडते क्रीडनार्थकाः ॥ १९ ॥
(१८) हिलति स्याद्भावकृतौ त्रयं चुङ्गति चुल्लति ।
(१९) विडम्बयत्यनुकरोत्यात्मनेऽनुहरत्यदः ॥ २० ॥
अनुकारे (२०) रिङ्खणे तु रिङ्खति स्खलति द्वयम् ।
(२१) भण्डते स्फुण्डयति च केलौ परिहसत्यपि ॥ २१ ॥
(२२) कुत्सिते स्मयने प्रोक्तं तङ् वा कुस्मयते पदम् ।
(२३) तर्षे तृष्यत्यमी धित्सत्युदन्यति पिपासति ॥ २२ ॥
(२४) पिबत्याचामति धयत्यपि चूषति पीयते ।
पाने(२५)ऽथ क्षुध्यति क्षुध्यशनायति जिघत्सति ॥२३॥
(२६) जेमत्यश्नाति जमति भक्षयत्यात्ति खादति ।
चरति प्साति झमति भुङ्क्ते चमति चर्वति ॥ २४ ॥
वल्भते घसति क्वापि छमति प्रत्यवस्यति ।
चषत्यप्यभ्यवहरत्येते तर्णोति भक्षति ॥ २५ ॥
तृणोति चात्मने पश्चाप्युपभुङ्क्ते च जक्षिति ।
वेति भुक्तौ विष्वणति चावष्वणति सध्वनौ ॥ २६ ॥
(२७) ग्रसते ग्लसते गीर्णौ गिरत्येते गिलत्यपि ।

(२८) गर्हितार्थां निजागर्ति निजोगिल्यत इत्यपि ॥ २७ ॥
(२९) दन्दश्यते दन्दशीति दन्दष्ट्यपि च खर्दति ।
गर्ह्ये दंशे(३०)ऽथ दशति शुद्धे दंशयति द्रवम् ॥ २८ ॥
(३१) वान्तौ वमत्युद्गिरति स्नुवत्युद्गिलतीत्यमी ।
(३२) निष्ठीव्यति ष्ठीव्यति च निष्ठीवति च थूत्कृतौ ॥ २९ ॥
(३३) शेषे परिशिनष्टीति शेषयत्यपि शेषति ।
(३४) तृप्यत्येते मादयते तृप्तौ घ्रायति तृम्फति ॥ ३० ॥
तृप्नोत्येके छन्दसीदं तृपत्येवं चकत्यपि ।
(३५) विश्राम्यतीति विश्रान्तौ क्वचिद्विश्रमते मतम् ॥ ३१ ॥
(३६) स्युरास्ते तूपविशति निषीदत्युपवेशने ।
(३७) ऊर्ध्वीभवति तूत्तिष्ठत्यूर्ध्वत्वे तिष्ठतीत्यपि ॥ ३२ ॥
(३८) आदाने कोकते लाति गर्हते ग्लहते क्वचित् ।
वर्कते घिण्णते गृह्णात्येवं झषति चीवति ॥ ३३ ॥
स्वीकरोतीति चत्वारि चात्मने स्युः प्रतीच्छति ।
घुण्णतेऽमी गृहयते घृण्णते स्युश्चतुर्दश ॥ ३४ ॥
(३९) रहति त्यजति त्यागे जहात्युज्झति वुस्यति ।
विसृजत्युत्सृजति च मुञ्चते मुञ्चतीति च ॥ ३५ ॥
विष्यत्यवस्यति रहयति मोक्षयतीत्यपि ।
मोचयत्यूनयति चोत्सृज्यते हापयत्यमी ॥ ३६ ॥
(४०) वृणक्ति वर्जयति च वृङ्क्ते युङ्गति जुङ्गति ।
वर्जने राखति प्रत्याचष्टे वर्जति वुङ्गति ॥ ३७ ॥
व्यासेधति निषेधत्यात्मने परिहरत्यपि ।
(४१) अथ व्रीणाति वरति वृणाति च वृणोति च ॥ ३८ ॥
व्रीण्यात्मनेऽपि वरणे वारयत्यपि वृक्षते ।
वावृत्यते कीटयति व्रीयते चापि वृश्यति ॥ ३९ ॥

(४२) करोति हस्तेपाणिभ्यां कुरुते चोपयच्छते ।
विवहत्युद्वहति चोद्वाहे परिणयत्यपि ॥ ४० ॥
चत्वारि चात्मने (४३) ज्येष्ठेऽनूढेऽत्र परिविन्दति ।
(४४) परिष्वजत आश्लिष्यत्यालिङ्गत्युपगूहति ॥ ४१ ॥
क्रोडीकरोत्यात्मने द्वावङ्कपालयतीति च ।
आलिङ्गने सप्त परिरभतेऽप्य(४५)थ कामने ॥ ४२ ॥
रिरंसते कामयते यियप्सति (४६) वृषस्यति ।
अन्यस्त्री चे(४७)दथाश्वा चेदश्वस्यत्य(४८)थ चुम्बने॥४३॥
निक्षति चुम्बति निंस्ते (४९) व्यवैति मिथुनीभवत्यपि च ।
यभति च भजतीत्येते निधुवति संविशति मैथुनेऽमी स्युः॥४४॥
(५०) उपभुङ्क्ते तूपभोगे सम्भुङ्क्ते निर्विशत्यपि ।
(५१) शूलत्यामयतीत्येते रुजत्यपि रुजि त्रयम् ॥ ४५ ॥
(५२) प्रसूयते प्रसूते च गर्भमोक्षे विजायते ।
प्रजायते जनयति जजन्ति च्छान्दसं विदुः ॥ ४६ ॥
(५३) उल्लाघयति भैषज्ये भिषज्यति चिकित्सति ।
उपक्रमत इत्येतच्छाम्यत्युपरमत्यमी ॥ ४७ ॥

इति मनुष्यचेष्टावर्गः ॥ १ ॥

२. अथ ब्रह्मचेष्टावर्गः ॥

(१) प्रक्षालयति पल्पूलयति शोधयतीत्यमी ।
निर्णेनेक्ति पुनातीति धावत्यप्यात्मने त्रयम् ॥ ४८ ॥
निङ्क्ते मार्ष्टि च शौचे स्युर्मार्जयत्यपि मार्जति ।
(२) मज्जत्याप्लवते स्नाति स्नायत्येतेऽवगाहते ॥ ४९ ॥
स्युर्मज्जने क्रुडत्येते (३) शुन्धयत्यपि शुन्धति ।
शुन्धते शुध्यति शुचीभावे स्युरवदायति ॥ ५० ॥
(४) उपस्पृशति चाचामत्यमू आचमनार्थके ।

(५) अभिवादयते नमति प्रणतावभिवन्दते नमस्यति च ॥ ५१ ॥
उपसङ्गृह्णात्युपसङ्गृह्णीते प्रणिपतति नमस्कुरुते ।
(६) अथार्चत्यञ्चति भजत्यपचायति चात्मने ॥ ५२ ॥
चत्वारि वल्गूयति च सभाजयति मानति ।
सपर्यत्यर्चयति चाराध्नोति महयत्यपि ॥ ५३ ॥
पूजयत्यर्हयति च महत्याराधयत्यपि ।
मानयत्यञ्चयति चार्हति यक्षयतेऽर्चने ॥ ५४ ॥
(७) सम्मन्यते त्वाद्रियते सम्भावयति सूर्क्षति ।
सत्करोत्यादरेऽपि स्यु(८)रुपास्तौ वरिवस्यति ॥ ५५ ॥
शुश्रूषते परिचरत्युपास्ते च द्रवस्यति ।
(९) यजति त्रिदशार्चायां यजते चोपतिष्ठते ॥ ५६ ॥
(१०) भिष्णज्यत्युपसेवायां लाडयत्युपसेवते ।
वासयत्यपि संवाहयति विश्रमयत्यपि ॥ ५७ ॥
(११) ददाति निर्वपति च दधात्यपि च दाशति ।
सनोति दासति दिशत्यात्मने सप्त यच्छति ॥ ५८ ॥
अपवर्जयति स्पर्शयति विश्राणयत्यपि ।
वितरत्यर्पयति च चणत्यतिसृजत्यपि ॥ ५९ ॥
ददते राति शणति प्रतिपादयतीति च ।
दाने विलभते भ्राजयति श्रणति लाति च ॥ ६० ॥
(१२) स्वधाकरोत्यात्मने द्वौ पितृभ्यो निर्वपत्यपि ।
(१३) विक्षिपत्यात्मनेऽपि स्याद्विक्षेपे विकिरत्यपि ॥ ६१ ॥
(१४) प्राक्षिप्यति प्राक्षिपति मिनोत्यप्यात्मने द्वयम् ।
प्रक्षेपे पर्थयति च (१५) हविर्दाने जुहोत्यदः ॥ ६२ ॥
स्वाहावौषड्वषडभ्यश्च करोति कुरुते पदे ।
(१६) प्रीणाति प्रयति द्वावप्यात्मनेऽवति तर्पति ॥ ६३ ॥

पृणाति प्रीणयति च जिन्वत्यपि च हिन्वति ।
धिनोति धिन्वति प्रायतीत्यादीनि च तर्पणे ॥ ६४ ॥
(१७) केतयत्यामन्त्रयते निमन्त्रयत इत्यपि ।
आमन्त्रणे ग्रामयति कुणयत्यपि पञ्चकम् ॥ ६५ ॥
(१८) धापयत्यात्मनेऽपि द्वौ धापने पाययत्यमू ।
चूषयत्यादयोऽप्यत्र स्यु(१९)रथो परिवेषणे ॥ ६६ ॥
परिवेवेष्टि परिवेविष्टे यामयति त्रयम् ।
(२०) आदयत्यात्मनेऽप्येतद्भोजयत्यादि भोजने ॥ ६७ ॥
(२१) पृणाति पूरयति च पिपर्ति प्राति पूर्वति ।
पारयत्युम्भति तथा पर्वत्युभति मर्वति ॥ ६८ ॥
तूणयत्याप्याययति पूरणे स्युर्भृणाति च ।
(२२) आह्लादते मृडति च मृणाति सुखयत्यपि ॥ ६९ ॥
पृडत्येवं मदयति मृडयत्यादि तोषणे ।
(२३) इज्यारम्भे दीक्षते च (२४) जपतीति जपे तथा ॥ ७० ॥
(२५) जञ्जप्यते तु जञ्जप्ति कुत्सिते जञ्जपीति च ।
(२६) अभुक्तौ तूपवसति लङ्घते व्रतयत्यपि ॥ ७१ ॥
(२७) तपस्यति श्राम्यति च तप्यते च तपःकृतौ ।
(२८) मुण्डति मुण्डयति च मौण्ड्ये वापयतीति च ॥ ७२ ॥
मद्राकरोत्यात्मनेऽपि द्वयं भद्राकरोति च ।
(२९) उपेक्षत उदास्ते च पदे माध्यस्थ्यवाचिनी ॥ ७३ ॥
(३०) स्युर्विरज्यत्युपरमत्यात्मने विरमत्यमी ।
उपशाम्यति वैराग्ये मोक्षते च मुमुक्षते ॥ ७४ ॥
(३१) परिव्रजति सन्न्यासे सन्न्यस्यत्यात्मनेऽप्यदः ।
(३२) ब्रह्मीभवति कैवल्ये मुच्यते चापवृज्यते ॥ ७५ ॥

इति ब्रह्मचेष्टावर्गः ॥ २ ॥

## ३. अथ क्षत्रियचेष्टावर्गः ॥

(१) ऐश्वर्ये इन्दति नाथति सुरत्यपि नाधते ।
तप्यते तपतीत्येके सुवतीष्टे च सौति च ॥ ७६ ॥
(२) भुनक्ति पाति दयते गोपायति पिपर्ति च ।
रक्षति त्रायते त्राणे पालयत्यपि तेजति ॥ ७७ ॥
स्पृणोति कुण्डयति च गुण्डत्यवति जंसति ।
(३) शास्ति शिष्टौ दण्डयति शिक्षयत्यपि दाम्यति ॥ ७८ ॥
(४) आवर्जयति वशयत्यपि राधयतीति च ।
वशीकरोति सङ्गृह्णात्यात्मने द्वौ वशीकृतौ ॥ ७९ ॥
(५) परिक्रीणीत इत्येतदुत्कोचादिवशीकृतौ ।
(६) आयत्तौ स्यादायतते वशीभवति राध्यति ॥ ८० ॥
(७) स्थिरीकृतौ स्थापयति द्रढयत्यपि बृंहति ।
(८) दधाति धत्ते बिभृते बिभर्ति भरतीति च ॥ ८१ ॥
धरतीत्यात्मनेऽपि द्वौ धुरण्यति धियत्यपि ।
मलते धारयति च मल्लते पोषयत्यपि ॥ ८२ ॥
दधते त्रासयति च स्कुन्दते धारणार्थकाः ।
(९) नियुङ्क्ते आज्ञापयति निर्दिशत्यादिशत्यपि ॥ ८३ ॥
द्वावात्मनेऽपि चाज्ञाया(१०)मथ प्रस्थापयत्यमी ।
स्युः प्रेषणे प्रेषयति प्रेष्यति प्रहिणोति च ॥ ८४ ॥
(११) सन्देशे वादयति च सन्दिशत्यात्मनेऽप्यदः ।
(१२) सुवति क्षिप्यति प्रेरयतीरति कुक्षुभ्यति ॥ ८५ ॥
नुदति क्षिपतीत्येतावात्मने कालयत्यपि ।
डिपत्येवं डेपयति लाभयत्यपि डिप्यति ॥ ८६ ॥
ईरयत्येलयति च प्रेरणेऽस्यति विस्यति ।
(१३) सेवते जुषते चापि शेवते क्लेवतेऽपि च ॥ ८७ ॥

खेवते गेवते चापि ग्लेवते पेवते तथा ।
मेवते चापि सेवायां भजति श्रयतीति च ॥ ८८ ॥
आत्मनेऽनुरुणद्ध्येतेऽनुसरत्यनुवर्तते ।
(१४) सम्भक्तौ तु वृणीते स्युर्वनत्येवं सनत्यमी ॥ ८९ ॥
(१५) सजूःकरोत्यात्मनेऽपि साह्ये सत्राकरोति च ।
(१६) नृणाति लम्भयति च वहत्यपि नयत्यमू ॥ ९० ॥
आत्मनेऽपि प्रापणे स्युः प्रापयत्यापयत्यपि ।
गत्यर्था ये णिजन्तास्ते धातवो नीञ्समार्थकाः ॥ ९१ ॥
(१७) मन्दायते शोठति च लुण्ठत्यपि विलम्बने ।
द्वावात्मनेऽपि समयाकरोति व्याक्षिपत्यमू ॥ ९२ ॥
(१८) प्रतीक्षते प्रतीक्षायां स्युरागमयते तथा ।
अनुपालयतीत्येते प्रतिपालयतीति च ॥ ९३ ॥
(१९) त्वरायां सम्भ्रमति च सम्भ्राम्यति तुरण्यति ।
गुप्यति त्वरते सम्भ्रम्यति तुतोर्ति च ॥ ९४ ॥
(२०) वैक्लव्ये विक्लवति च टलति ट्वलतीति च ।
समति स्तमतीत्येते विह्वलत्यपि क्रन्दते ॥ ९५ ॥
क्रन्दतेऽपि च कैश्चित्तु क्लदते क्रदते स्मृते ।
(२१) क्लीबायते क्लीबते च क्लैब्ये स्युरवगल्भते ॥ ९६ ॥
(२२) कुटति ग्रन्थते ह्वर्छत्यपि क्मरति वङ्कते ।
नसते तुणति क्रुञ्चत्येवं ह्वरति कुञ्चति ॥ ९७ ॥
भुजति ध्वरतीत्येते कौटिल्ये न्युब्जतीति च ।
(२३) गुप्तोक्तौ स्यान्मन्त्रयते (२४) भेदे तूपजपत्यदः ॥ ९८ ॥
(२५) दम्भेच्छायां धीप्सतीति दिदम्भिषति धिप्सति ।
(२६) संवर्मयति सन्नह्यत्यात्मने सज्जतीत्यमी ॥ ९९ ॥
संयतते दंशयते सन्नाहे पदपञ्चकम् ।

(२७) अध्यास्ते त्वधिशेते चाधिवसत्यधितिष्ठति ॥ १०० ॥
अधिरोहत्यधिक्रामत्यारोहत्यधिरोहणे ।
(२८) स्पन्दने स्पन्दते तद्वत्स्फुरति स्फुलति द्वयम् ॥ १०१ ॥
(२९) चलने चलति प्रेङ्खत्येवं ह्मलति घट्टते ।
वलते वल्लते वेल्लत्येवं ह्वलति चेलति ॥ १०२ ॥
(३०) उच्छ्राये तटति स्तुभ्यत्युच्छ्रयत्यात्मनेऽप्यदः ।
(३१) क्षोभते क्षुभ्यति क्षोभे क्षुभ्नाति च्छान्दसं क्वचित् ॥ १०३ ॥
(३२) प्रतिष्ठतेऽञ्चत्ययते व्रजत्ययति गच्छति ।
ऋणोत्यटति यात्येति सरतीयर्ति सर्पति ॥ १०४ ॥
हम्मति द्रमति त्वङ्गतीङ्गत्यमति मीमति ।
जिहीते कङ्कते नक्षतीखत्यृच्छति वभ्राति ॥ १०५ ॥
श्वङ्कते त्रौकते वस्कतेऽहते टीकतेऽभ्रति ।
मस्कते लङ्घते शोणत्यङ्घते त्रङ्कतेऽर्दति ॥ १०६ ॥
पयते वयते विच्छायति पन्थयतीयते ।
चरण्यति स्रङ्कतेऽपि घटते श्वञ्चतेऽङ्गति ॥ १०७ ॥
रङ्गति श्वचते लङ्गतीर्ते ध्वजति ध्वञ्जति ।
चरति धञ्जति श्रवत्यण्ठते ग्लुञ्चतीष्यति ॥ १०८ ॥
वञ्चति म्रोचति म्लोचत्यजति त्वञ्चतीजते ।
फणति द्रवते गाते पद्यते विच्छति क्वचित् ॥ १०९ ॥
पथति क्रामति पतयते रिण्वति रण्वति ।
स्रवति श्यायते धन्वत्यञ्चते सलतीत्यपि ॥ ११० ॥
शुनति छङ्गयति च श्वर्तयत्यपि रेवते ।
ससर्ति च्छान्दसं केचिदेषते नेषते गतौ ॥ १११ ॥
सप्ताशीतिरितोऽप्यन्ये नोक्ता विस्तरतो भयात् ।
(३३) वेगितायां गतौ सप्तामी स्युर्धावति तूर्यते ॥ ११२ ॥

जवति स्खलति स्खलत्यपि द्रवति रंहति ।
(३४) डयते डीयते व्योमगते(३५)ऽथाकति चागति ॥ ११३ ॥
चञ्चूर्यतेऽटाट्यते जङ्गम्यते चाप्यरार्यते ।
गत्यर्था यङ्लुगन्ता ये कुटिलायां गतौ हि ते ॥ ११४ ॥
(३६) वल्गतीति प्लुतगतौ प्लवते शशति त्रयम् ।
(३७) मन्दायां चोपति गतौ (३८) चतुरायां तु धोरति ॥ ११५ ॥
(३९) सन्ततायामतति च (४०) त्सरति च्छद्मना गतौ ।
(४१) मन्दते विकलायां तु द्वयं खञ्जति खोरति ॥ ११६ ॥
(४२) नीचैः फक्कति (४३) कुत्सायां द्रात्य(४४)थाग्रे पुरत्यदः ।
(४५) पवते वाति वातस्य (४६) वहति प्रवहत्यपाम् ॥ ११७ ॥
(४७) भ्रमति भ्राम्यति भ्रम्यत्यपि पर्यटति भ्रमे ।
घोणते घूर्णते पर्येत्येते घुणति घूर्णति ॥ ११८ ॥
(४८) उद्गच्छत्युन्नमति चाप्युज्जिहीत उदीयते ।
उदञ्चत्युदयत्येतावात्मने द्वावुदेति च ॥ ११९ ॥
गत्यर्थाः प्राय उत्पूर्वा * उदयस्याभिधायकाः ।
(४९) आक्रम्यते चाक्रमते ज्योतिष्कर्तृक उद्गमे ॥ १२० ॥
(५०) सञ्चारे चरतीत्येष तृतीयायुक्त आत्मने ।
(५१) पतत्यधोगतौ भ्रंसतेऽपि भ्रश्यति भृश्यति ॥ १२१ ॥
गलति स्रंसतेऽष्टामी च्यवते स्कन्दतीति च ।
(५२) अस्तङ्गमेऽस्तमयते निम्लोचत्यस्तमेति च ॥ १२२ ॥
(५३) इष्यति नश्यति पलायतेऽन्तर्धत्त इत्यपि ।
मुण्ठतेऽपैत्यपक्रामत्येवमाद्याः पलायने ॥ १२३ ॥
(५४) स्कुनाति च स्कुनीते च स्कुनोत्याप्रवतेऽपि च ।
स्कुनुते स्कुन्दते चापि षडाप्रवणवाचिनः ॥ १२४ ॥

* "उदयार्थाभिधायकाः" इति राघवनैषधीय ९।३ श्लोकव्याख्याने पाठः ॥

(५५) अतिक्रामत्युच्चरते चाट्टत्यतिचरत्यपि ।
उल्लङ्घयत्यतिक्राम्यत्येवमाद्या अतिक्रमे ॥ १२५ ॥
(५६) द्यौत्यभिगच्छत्यभियात्यभ्येत्याद्या अभिक्रमे ।
(५७) अभियोगेऽभ्यवस्कन्दत्यङ्कुत्यास्तिघ्नुतेऽपि च ॥ १२६ ॥
सम्राभियुङ्क्ते तिक्नोति तिघ्नोत्यासेधतीति च ।
(५८) सेनया त्वभियाने स्यादभिषेणयतीति च ॥ १२७ ॥
(५९) सन्निकर्षत्यवष्टभ्नात्यासीदत्यपि नेदते ।
परस्मै द्वौ सन्निकृषतेऽवष्टभ्नोति चान्तिके ॥ १२८ ॥
(६०) प्राप्तौ प्राप्नोति भवते विन्दत्यवरुणद्धि च ।
आत्मनेऽपि द्वयं भावयते लभत ऋच्छति ॥ १२९ ॥
(६१) व्याप्नोति चाश्नुतेऽक्ष्णोति व्याप्तौ श्लाखति शाखति ।
द्वावाचिनोति वेवेष्ट्यात्मनेऽप्यक्षति चेन्वति ॥ १३० ॥
(६२) पर्याप्नोति तु शक्नोति क्षमते प्रभवत्यपि ।
प्रोथत्यलत्यात्मनेऽपि द्वौ पारयति कल्पते ॥ १३१ ॥
राघते लाघते शक्तौ स्फुरते विभवत्यपि ।
(६३) स्युरुद्यमेऽवगुरते वृहत्यडति गूर्यते ॥ १३२ ॥
उद्गारयत उद्युङ्क्त उद्यच्छत्यात्मनेऽप्यदः ।
(६४) ह्रेडति स्नायति वटत्यपि गुध्यति वण्डते ॥ १३३ ॥
मण्डते वेष्टते वेष्टि मगध्यति मुरत्यपि
कृणत्ति गुण्डयति च परिक्षिपति चात्मने ॥ १३४ ॥
(६५) वेष्टनायां वटयति वेष्टयत्यादयोऽपि च ।
(६६) निरुणद्धि निगृह्णाति चात्मने द्वौ निरोधने ॥ १३५ ॥
(६७) आञ्छत्याकर्ष आकर्षत्यायच्छत्यात्मनेऽप्यदः ।
(६८) धृष्णोति चाधिकुरुते धर्षयत्यपि धर्षति ॥ १३६ ॥
जयत्येवं विजयते जयत्यभिभवत्यपि ।

